मू० [a] व्याप्तिपक्षधर्मत्वयोः प्रतीतिमपेक्ष्य यथानुमानं जायते तथैव तर्कोऽपि इयान् परमनयोर्विशेषो यदनुमानं तयोः प्रमित्या जायते तर्कस्त्ववास्तवाभ्यामपि ताभ्यां पराभ्युपगममात्रसिद्धाभ्यां भवति तेन विमृष्यमाणः तर्कः पराभ्युपगममात्रप्रसादसिद्धपरिकरो नाश्रयसिद्धिमपि तावद्वास्तवीमनुरोद्धुमधिकरोति ततः प्रमित्यभ्युपगमसिद्धिकृतवैचित्र्याश्रयाद्भेदादन्यो यावान् यथा च हेत्वाभासविभागः तद्वदेव च तर्काभासविभागोऽपि न्याय्यः। [b] तस्मादाश्रयासिद्धिमूलशैथिल्येष्टापादनान्यसिद्धिरेकैव दोषोऽनुमानव—

टी० ॥ नन्वनुमानापेक्षया बीजवैषम्यमनीषामिति तद्दोषवैषम्येनापि भवितव्यमित्यत आह—। [a]"व्याप्ती" ति। व्याप्तिपक्षधर्मतयोरभ्युपगमो बीजमिति व्याप्तिपक्षधर्मताश्रया एव दोषा इतोऽपि भवितुमर्हन्तीत्यर्थः। "प्रमित्यभ्युपगमसिद्धी" ति। अनुमाने प्रमितिरूपा सिद्धिस्तर्के त्वभ्युपगमरूपा सिद्धिस्तत्कृतं यद्वैचित्र्यं तदाश्रयाद्भेदादित्यर्थः। तथाचैतावानेव भेदस्तर्कानुमानयोर्न त्वन्यो येन वैषम्यं स्यादित्यर्थः। ननूक्तास्तर्कदोषा हेत्वाभासेषु चेन्नान्तर्भवन्ति तदा तत एव तत्र भविष्यन्तीत्यत आह— "तस्मादि" ति। "असिद्धिरेकैवे" ति। स्वाश्रयासिद्धिः स्फुटैव मूलशैथिल्यं व्याप्यत्वासिद्धिरेव इष्टापादनं स्वाश्रयासिद्धिरेव सिद्धसाधनद्वारिकेत्यर्थः ॥

मू० त्तत्राप्रमितत्वावलम्बिनीह त्वनभ्युपगमावलम्बिनीति विशेषः मिथोविरोधश्च सत्प्रतिपक्षतैव [a]विपर्ययापर्यवसानं तु दोष एवापादनस्य न भवति यन्नाम विपर्ययापर्यवसानादापादनमात्मसाधनानुकूलं न भवति तदन्यदेव किमपि [b]बाधविरुद्धत्वव्यभिचा-

रास्त्वनुमानवत् तर्केऽपि दोषाः पृथग्वाच्याः [c]बाध उत्सर्गसम्भावनादेरन्यत्रानुकूलः तर्कस्य सप्तममपि दोषं तर्कस्यापत्तिसाम्यं न नामोपगच्छामः स चोभभ्यामभ्युपगतव्याप्येनानभ्युपगतव्यापकेन प्रागेव [d]दर्शित इत्यास्तां विस्तर इति ॥

टी० ॥ तत्रेति । हेतौ । इहेति । तर्के । विपर्ययापर्यवसायितर्केण परसाधनदोषाभिधानस्यादर्शितत्वादित्याह । [a]"विपर्यये" ति । तर्कदोषविभागे न्यूनत्वमाह—। [b]"बाधे" ति । यद्यपि विरुद्धहेतौ तथापि यथानुमाने व्याप्यत्वासिद्धेः प्रस्तावेन तयोः परिगणितं तथात्रापि स्यादित्यर्थः । ननु बाधेन गुण एव न तु दोष इत्यत आह—। [c]"बाध" इति । उत्सर्गोऽप्यसम्भवाख्ये च तर्के तत्रापि भवत्येवोत्सर्ग इत्यर्थः । पूर्वोपपादितनर्कदोषान्तरमाह—। [d]"दर्शित इतो" ति । यत्रोभयोः समो दोष इत्यादिस्थल इत्यर्थः । एतदेव विविच्याह—"स चे" ति ॥

मू० एवं प्रकाराणि तत्तल्लक्षणेषु खण्डनान्यूहनीयानि । तदेतासु खण्डनयुक्तिषु कामपि स्थानान्तरस्थां केनापि प्रकारान्तरेणानीय तत्सदृशीमन्यां वा स्वयमूहित्वा परैर्विविच्यमानानि पदार्थान्तराण्यपि बुद्धिमता बाधनीयानि । अत्र चास्माभिर्दूषयितुं शङ्कितेभ्यः परपक्षप्रकारेभ्यो यदि प्रकारान्तरं कोऽपि स्वयमूहति उक्तानां बाधकानां मध्ये क्वचित्प्रज्ञया समाधानमभिदध्यात्तत्र खण्डनवादिनः प्रस्तुता प्रतिक्रिया न स्फुरेत्तदा परेण प्रयुज्यमाने वाक्ये बहुपदात्मके कस्यचित्पदस्यार्थं खण्डयितुं [e]खण्डनान्तरमवतारणीयम् । एवं तत्रापि परेण प्रज्ञाशोषणे पुनस्तथैव शाखान्तरेषु संक्रमणीयमिति प्रकारेण खण्डनमये चक्रे सम्यगवधेयम् ॥

टी० ॥ उक्तखण्डनमन्यत्रातिदिशति—। [a]"एवं प्रकाराणा" ति । ये पदार्थाः यानि च लक्षणानि खण्डितानि तेषां सिद्धान्तिभिः प्रकारान्तरेणोपन्यासे कृते तत्खण्डने स्वयं समाधाने वा कृते खाण्डनिकाय प्रकारमुपदिशन्ति—। [b]"तदेतास्वि" ति । प्रज्ञाशेषः खाण्डनिकस्य सर्वथात्यन्तमवधेय इति यत्किञ्चित्सिद्धान्ती वदति—। [c]"खण्डने" ति । तत्खण्डनमवतारणीयमित्यर्थः ॥

मू० [a]नच शाखान्तरसंक्रान्तावर्थान्तरं पतेत् अप्रकृतत्वाभावात् [b]न चैकनिर्णयारम्भे ऽन्यसंक्रान्तावनौचित्यं स्यात्, शब्दोऽनित्यः कृतकत्वादित्यादौ परेणोक्ते कृतकत्वादावविंप्रतिपत्तव्यत्वापत्तेरन्यतरासिद्ध्याद्युच्छेदापातात् । येन हि तन्निर्वाह्यते तदनिर्वचनीयतयापि निर्वाह्यानिर्वचनीयतैवेति तस्मात् । [c]"तत्तुल्योहस्तदीयं च योजनं विषयान्तरे । शृङ्खला तस्य शेषे च त्रिधा भ्रमति मत्क्रिया ॥ [d]ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया,

टी० ॥ प्रकृतपदार्थखण्डनमुपक्रम्य यत्किञ्चित्खण्डनाचरणेऽर्थान्तरं स्यादित्याशङ्कयाह—। [a]"नचे" ति । प्रकृतपदार्थखण्डनोपयोगितैव तदभिधानान्नार्थान्तरत्वमित्यर्थः । ननु माभूदर्थान्तरत्वमनौचित्यं स्यादेव शाखान्तराश्रयण इत्यत आह—। "नचे" ति । एवमनौचित्ये शब्दानित्यत्वं विप्रतिपद्य तत्साधने कृतकत्वे पुनर्विप्रतिपत्तावनौचित्यं भवेत् येनान्यतरासिद्ध्युपन्यासोऽपि न घटेतेत्यर्थः । अर्थान्तरत्वनिरासायोक्तमर्थं कारिकया सङ्कलयति—। [c]"तत्तुल्ये', ति । उक्तखण्डनतुल्यस्य खण्डनान्तरस्योहः उक्तस्यैव वा खण्डनस्य विषयान्तरे योजनम् । उभयथाऽपरिस्फूर्त्तौ यत्किञ्चित्पदमादाय खण्डनमुक्तं खण्डनस्मरणं चेति प्रक्रिया त्रिविधा भ्रमतीत्यर्थः । क्वचित् "धात्रनतिमत्क्रियेति पाठः" मतिमतामत्र त्रिधा क्रियेत्यर्थः ।

कठिनोक्तिदोषं समाधातुमाह—। [d]"ग्रन्थग्रन्थिरि" ति । अभिसन्धिपूर्वकमेव क्वचित्किञ्चित्काठिन्यं न त्वकौशलकृतमित्यर्थः ॥

मू० "प्राज्ञंमन्यामना हठेन पठितो मास्मिन् खलः खेलतु
श्रद्धाऽऽराद्धगुरुः श्लथीकृतदृढग्रन्थिः समासादय,
त्वे तत्तकरसोर्मिमज्जनसुखेष्वासञ्जनं सज्जनः, ॥
[b]ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरा-
द्यः साक्षात्कुरुते समाधिषु परब्रह्म प्रमोदार्णवम् ।
यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः, श्री
श्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम् ॥
इतिश्रीश्रीहर्षतानिर्वचनीयसर्वस्वे खण्डनखाद्ये
तुरीयः संकीर्णपरिच्छेदः । शुभमस्तु ॥

टी० ॥ ग्रन्थिन्यासे हेतुमाह—। [a]"प्राज्ञंमि"ति । (१)प्रसन्नतायां स्वयमेव पुरुषस्तदर्थं जानीयादित्यर्थ एवाक्य ग्रन्थस्य न स्यादिति भावः । श्रद्धया आराद्धः सेवितो गुरुर्येन तेन श्लथीकृतो दृढो ग्रन्थिर्यस्य स सज्जन एव तर्करूपो रसस्तस्योर्मिषु मज्जनेन यत्सुखं तेषु आसञ्जनमासंगमासादयत्वित्यर्थः [illegible]र्धीत्य खण्डनमयं तर्कप्रयोगेन विजयडिण्डिममासादयतु सज्जन इति भावः । स्वोत्कर्षख्यापनेन ग्रन्थस्य श्लाघनीयतामाह—[b]"ताम्बूले"ति । "स्वभ्रातुर्जयनाथस्य व्याख्यामाख्यानवान् यतः । प्रत्यिया भवनाथोयं तामिहाखिलमुज्ज्वलाम् ॥ इति श्री महामहोपाध्यायसन्मिश्रभवनाथात्मज महामहोपाध्यायसन्मिश्रशङ्कर विरचिताखण्डनखाद्यचतुर्थपरिच्छेदशाङ्करी टीका (२)समाप्ता ॥ शुभमस्तु । परमेश्वराय नमः ॥

समाप्तोयं ग्रन्थः ॥

---

(१) प्रसन्नतायाम्—ग्रन्थस्य सरलत्वे ।

(२) अत्रेति पदस्य समाप्त्यर्थकत्वे समाप्तेति पुनरुपादानमाम्रेडनमात्रम् । पूर्वोपन्यस्तयन्यार्थकत्वे तु समाप्तेति यथास्थितमेव—